मसिद्धौ लार्डोपाधियुक्तः कर्जन्नामकः ऐंग्लिशः कनाटद्वीपेन कनाट-भूपालिना च समं सार्धं तस्मिन् विषये अभिनवभे अनुलितशोभान्विते तत्रेन्द्रप्रस्थे पुरे नगरे समाययौ माप ॥

भा०---अनन्तर राजेश्वरकी आज्ञापाकर जिसकारणसे कि वे प्रसिद्ध लार्ड-कर्जन कनाटभूपाल ( ड्यूक आफ कनाट ) के साथ उस उत्सवमें बड़ी शोभा-वाले उस इन्द्रप्रस्थ नगरमें आपहुँचे ॥ १३ ॥

तौ लार्डकर्जन्सुकनाटभूपा-
वेतौ सभार्यौ जनताऽनुमत्या ।
द्विपौ समारुह्य तदेन्द्रप्रस्थ-
पुरश्रियं वीक्षितुमीषतुस्ताम् ॥ १४ ॥

टी०---ताविति । तदा तस्मिन्समये सभार्य्यौ सस्त्रीकौ लार्डकर्जन्श्च सुकनाटभूपश्चेति तावेतावुभौ पुरुषश्रेष्ठौ जनतानुमत्या लोकसम्मत्या द्विपौ हस्तिनौ समारुह्यास्थाय तां प्रसिद्धां इन्द्रप्रस्थपुरस्य श्रियं शोभां वीक्षितुं द्रष्टुं ईषतुर्वाञ्छतःस्म ॥

भा०---उससमय सस्त्रीक लार्डकर्जन् और कनाटभूप इनदोनोंने लोकसम्मति से हाथियोंमें चढ़कर उस प्रसिद्धनगरशोभाको देखनाचाहा ॥ १४ ॥

अथ भारतवर्षभूमिपाला-
विहितातिथ्यविधी च तौ क्रमेण ।
अमराविव जिष्णुनानुयुक्तौ
समुदं स्त्रीसहितौ तदाऽनुजग्मुः ॥ १५ ॥

टी०---अथेति । अथानन्तरं तदा तस्मिन्समये भारतवर्षस्य ये भूमि-पाला राजानस्ते क्रमेण क्रमशश्च विहित आतिथ्यस्य सत्कारस्य विधि-र्ययोस्तथाविधौ तौ लार्डकर्जन् कनाटभूपौ जिष्णुना इन्द्रेणानुयुक्तौ प्रेरितौ स्त्रीसहितौ सस्त्रीकौ अमराविव देवौ यथा समुदं सहर्षं यथा तथा

1. Lord Curzon 2. Duke of Connaught.

"क्षयः क्षयन्नादव्ययीभावाइत्वा" अनुजग्मुः तत्पश्चादनुसमन्ततिभावः । अत्रोपमालङ्कारः ॥

भा०—अनन्तर उससमय भारतदेशीय सबराजाओंने क्रमपूर्वक [illegible] कर्जन्, कनाटभूपोंको सत्कारकर इन्द्रके भेजेहुये विमानोंसहित [illegible] बड़े हर्षसे उनदोनोंको अनुसरणकिया ॥ १५ ॥

पृतनाग्रसरो महाप्रवीरः
किच्नर्लार्डसमाख्यकः[1] पुरस्तात् ।
अतिवीररसेन शोभमानो
हयमारुह्य पुरीं हि तामियाय ॥ १६ ॥

टी०—हीति निश्चयेन महाप्रवीरस्तेजस्वी अतएव अतिवीररसेन शोभमानो विराजमानः किचनर् चासौ लार्डः सैव समाख्या ऽभिधानं यस्यैवंविधः पृतनाग्रसरः सर्वसेनापतिः पुरस्तादग्रतो हयं अश्वं आरुह्य तां प्रसिद्धां इन्द्रप्रस्थनामिकां पुरीं नगरीं इयाय जगाम ॥

भा०—यह प्रसिद्धहै कि बड़ातेजस्वी अतएव वीररसमें शोभायमान लार्ड किचनरनामक सेनापति सबसे आगे घोड़ेमें चढ़कर उस प्रसिद्ध दिल्लीनगरीको चले ॥ १६ ॥

प्रथमं पदचारिणः समीयु-
स्तदनु ह्याश्विकवाहिनी जगाम ।
अथ लार्डकनाटभूपती तौ
नगरे रम्यपथे मुदा सहैताम् ॥ १७ ॥

टी०—प्रथममिति । प्रथमं पूर्वं पदचारिणः पदातयः समीयुः आगताः आश्विकाः तदनु अश्वैश्चरन्तीति "चरतीत्यनेन ठक् प्रत्ययः" तेषां वाहिनी सेना जगाम ययौ अथानन्तरं लार्डः कनाटभूपतिश्चेति तावुभौ रम्यपथे "ऋक्-

1. Lord Kitchener.

पुरवर्त्मन्यर्थामिति समासान्तो ऽप्रत्ययः " रमणीयवर्त्मनि नगरे मुदा सह हर्षेण सार्धं येताम् अयासिष्टाम् ॥

भा०—वहां पहिले पदचारिणी सेना चली अनन्तर अश्वारोहिणी चली उसके अनन्तर लाडकर्जन् और ड्यूक आफ् कनाट अच्छे राजमार्गविशिष्ट नगरमें हर्ष के साथ चले ॥ १७ ॥

अथ हैदरवादभूमिपालः
ससुतो रञ्जितलोकचित्तवृत्तिः ।
महबूबअलीति नामधेयो
गजमारुह्य जगाम राजमार्गे ॥ १८ ॥

टी०—अथेति । अथानन्तरं ससुतस्तनुजेन सहितस्तथा रञ्जिता प्रसन्नतां प्रापिता लोकानां चित्तवृत्तिर्येन एवंविधो महबूबअली इति नामधेय एतन्नाम्ना प्रसिद्धो हैदरवादस्य देशविशेषस्य भूमिपालो महीपतिर्गजं कुञ्जरं आरुह्यास्थाय राजमार्गे जगाम अयासीत् ॥

भा०—अनन्तर अपने पुत्रके सहित तथा लोगोंको प्रसन्नकरनेवाले श्रीमन् महबूबअली नामधेय निजामहैदराबाद हाथी में चढ़कर उस दिल्ली के राजमार्ग में चले ॥ १८ ॥

मतिमान् बहुशास्त्रविद् बडोदा-
धिपतिर्वाङ्मयवित्प्रियैकबन्धुः ।
करिणं करुणामयो ऽधिरुह्य
नगरीं तां प्रययौ मुदा महे ऽस्मिन् ॥ १९ ॥

टी०—मतीति । मतिमान् सुधिषणो बाहुशास्त्रवित् अनेकशास्त्रज्ञः अत एव वाङ्मयविदां अधीतशास्त्राणां प्रियैकबन्धुः प्रियमित्रं एवंविधः करुणामयो दयायुक्तो बडोदाधिपतिर्बडोदानरेशः अस्मिन्महे उत्सवे मुदा हर्षेण करिणं हस्तिनं अधिरुह्य तां नगरीं इन्द्रप्रस्थनामिकां पुरीं प्रययौ जगाम ॥

भा०—बुद्धिविशिष्ट तथा बहुशास्त्रवेत्ता अनएव शास्त्रज्ञ पुरुषोंके आर्तिप्रिय-बन्धु तथा करुणार्द्रहृदय श्रीमान् बड़ोदानरेश इस उन्नतमें हथिनी हाथीमें चढ़कर उस दिल्ली नगरीको चले ॥ १९ ॥

शिवपूजनलब्धतत्त्वबोधो
ननु कश्मीरपतिः प्रतापसिंहः ।
अधिरुह्य सहानुजेन तत्रा—
मरसिंहेन नृपेण नागमागात् ॥ २० ॥

टी०—शिवेति । नन्विति निश्चयेन शिवपूजनेन लब्धः प्राप्तस्तत्त्वबोधो येन एवंविधः प्रतापसिंह एतन्नाम्ना प्रसिद्धः कश्मीरपतिः कश्मीरदेशस्वामी अनुजेन स्वकनिष्ठभ्रात्रा अमरसिंहेनेत्याख्याविशिष्टेन नृपेण भूपेन सह सार्धं नागं हस्तिनं अधिरुह्य तत्रेन्द्रप्रस्थे नगरे आगात् अयासीत् ॥

भा०—यह निश्चयहै कि शिवपूजनसे तत्त्वज्ञानोपेत श्रीमान् महाराजा प्रतापसिंहाभिधेय कश्मीरदेशके स्वामी अपने कनिष्ठभ्राता के, सी, आइ, ई, राजा श्रीअमरसिंह नामक महाराजके साथ हाथीमें चढ़कर उस दिल्ली नगरीको चले ॥ २० ॥

नयवर्त्मकृतात्मराज्यकार्यो
ननु मैसूरनराधिपो मनस्वी ।
करुणार्द्रमनाः स कृष्णराजो
द्विपमारुह्य पुरीमिमां प्रतस्थे ॥ २१ ॥

टी०—नयवर्त्मेति । नन्विति निश्चयेन मनस्वी शुद्धान्तःकरणः तथा करुणया आर्द्रं मनो यस्य अतएव नयवर्त्मनि कृतं आत्मनो राज्यस्य कार्यं येन तथाविधः स प्रसिद्धः कृष्णराज एतदाख्यान्वितो मैसूरनराधिपो मैसूरदेशाधिपतिः द्विपं करिणं आरुह्य इमां इन्द्रप्रस्थनामिकां पुरीं नगरीं प्रतस्थे उपागमत् ॥

भा०—यह निश्चयहै कि शुद्धान्तःकरण तथा दयायुक्त अतएव नीतिपूर्वक

अपने राज्यकार्य्य करनेमें निपुण हैं प्रसिद्ध श्रीकृष्णराव नामके गायकवाड़ हाथीपर चढ़कर इस इन्द्रप्रस्थ नगरीको चले ॥ २१ ॥

ट्रैमिन्कोराधिपतिर्विष्णुपरः पद्मनाभदासाख्यः ।
अस्यौदार्य्यविभूतिः पद्मिनमारुह्य तत्र संप्रययौ ॥२२॥

टी०—ट्रैभिन्निति । अस्यौदार्य्यस्य प्रभूतोदारताया विभूतिरैश्वर्यं यस्यैवंविधो विष्णुपरो हरावेकाग्रचित्तः पद्मनाभदासाख्य एतन्नामधेय-ट्रैभिन्कोराधिपतिष्ट्रैभिन्कोरदेशेशः दन्तिनं हस्तिनं आरुह्य तत्रेन्द्रप्रस्थे नगरे संप्रययौ गेपील् ॥

भा०—बड़े उदारशील विष्णुपरायण पद्मनाभदास नामके ट्रैभिन्कोरदेशेश्वर हाथीमें चढ़कर उस इन्द्रप्रस्थ नगरीमें चले ॥ २२ ॥

ग्वालीयराधिनाथो माधोरावाभिधानसंयुक्तः ।
अधिरुह्य दन्तिरत्नमियाय तत्र त्रिविक्रमाहितधीः ॥२३॥

टी०—ग्वालीयरेति । त्रिविक्रमे विष्णौ आहिता संस्थिता धीर्येनैवंविधो माधोरावाभिधानसंयुक्तो माधोरावनामधेयो ग्वालीयराधिनाथो ग्वालियरदेशेश्वरः दन्तिरत्नं श्रेष्ठनागं अधिरुह्य तत्र नगरे इयाय जगाम । श्लोकयोरुभयोर्गीतिर्वृत्तम् ॥

भा०—विष्णुपरायण श्रीमाधोराव नामके ग्वालियरेश्वर हाथीमें चढ़कर उस रम्य राजमार्गमें चले ॥ २३ ॥

आशान्तविख्यातयशा विचक्षणो
न्यायाऽनुरक्तष्टिहरीनराधिपः ।
श्रीकीर्तिशाहो गरुडध्वजाकृति-
र्नागं समारुह्य जगाम तत्पुरम् ॥ २४ ॥

टी०—आशेति । विचक्षणो विद्वान् अतएव न्यायाऽनुरक्तो राजनी-

निकुशलः अतएव आशान्तेषु दिगन्तेषु विख्यातं प्रसिद्धं यशो यस्यैवं-विधो गरुडध्वजाकृतिर्विष्णुरूपो दर्शनीयमूर्तिर्निभातः श्रीमान् कीर्ति-शाह पुनस्त्रिभुवनाधिपदर्शनार्थी नरेन्द्रो नागं हस्तिनं समारुह्य न-रनाथेन्द्र इन्द्रप्रस्थं पुरं नगरं जगामाययौ । अत्र पदार्थहेतुतया काव्य-लिङ्गालङ्कारः । अत्रेन्द्रवंशावृत्तम् ॥

भा० – जिनका यश सब [illegible] दिशाओं में [illegible] कीर्ति [illegible] श्रीमान् कीर्तिशाह [illegible] हाथी पर चढ़कर इस इन्द्रप्रस्थ नगरको चले ॥ २४ ॥

श्रीमांस्तथा जयपुराधिपतिर्महेऽस्मिन्
सद्धार्मिकः सपदि माधवसिंहनामा ।
दन्तावलं समधिरुह्य सुशीलरूप-
स्तामिन्द्रप्रस्थनगरीं समियाय नूनम् ॥ २५ ॥

टी० श्रीमानिति । नूनमिति निश्चयेन तथा तादृशमेव सुशीलरूपः स-त्कीर्तिविशिष्टः सद्धार्मिकः शुभधर्मोपेतः श्रीमान् माधवसिंहनामा माधव-सिंहाख्यो जयपुराधिपतिर्जयपुरस्वामी अस्मिन्महे उत्सवे दन्तावलं ह-स्तिनं समधिरुह्य सपदि तत्काले तां इन्द्रप्रस्थनगरीं समियाय अत्रा-जीत् । अत्र वसन्ततिलकावृत्तम् ॥

भा०—यह निश्चय है कि सुशीलरूप सत्कीर्ति सद्धार्मिक श्रीमान् माधवसिंह नामक जयपुराधीश्वर इस महोत्सवमें हाथी पर चढ़कर उस इन्द्रप्रस्थनगरी को चले ॥ २५ ॥

श्रीमांस्तथा जोधपुराधिनाथः
स्वराजनीत्याहितकार्य्यसक्तः ।
दन्तीन्द्रमारुह्य प्रतापसिंह-
स्तदिन्द्रप्रस्थं नगरं समेयात् ॥ २६ ॥

टी०—श्रीमानिति । स्वराजनीत्या निजराजनयेन आहितो विहितः कार्यसङ्गो येनैवंविधः श्रीमान् जोधपुराधिनाथो जोधपुराधिपतिः प्रतापसिंहः तथा पूर्वोक्तप्रकारेण दन्तीन्द्रं हस्तिश्रेष्ठं आरुह्यारुह्य तत्पुमिन्द्रं इन्द्रप्रस्थं नगरं समर्पतिं अगात् ॥

भा०—राजनीतिसे सारा राज्यकार्य करनेवाले, श्रीमान् जोधपुर के महाराज प्रतापसिंहनामक उसीतरह हाथी में चढ़कर उस इन्द्रप्रस्थ नगर को चले ॥ २६ ॥

श्रीपटियालाधिपतिर्गुरुप्रियः प्रकृतिरञ्जनैककृतिः ।

भूपेन्द्रसिंहनामा ऽधिरुह्य दन्तीन्द्रमाययौ तत्र ॥ २७ ॥

टी०—श्रीति । गुरवः प्रिया यस्य गुरुं ज्ञापक इत्यर्थः तथा प्रकृतिरञ्जनं एव एकाकृतिर्यस्यैवंविधो भूपेन्द्रसिंहनामा भूपेन्द्रसिंहाख्यः श्रीमान् पटियालाऽधिपतिः पटियालेश्वरो दन्तीन्द्रं हस्तिश्रेष्ठं अधिरुह्य तत्रोत्सवे आगत्य प्राप ॥

भा०—गुरुभक्त तथा प्रजापालन[illegible] भूपेन्द्रसिंहनामक श्रीमान् पटियालेश्वर हाथीमें आरूढ होकर उस महोत्सवमें आपहुंचे ॥ २७ ॥

वंहिष्ठकीर्तिर्यवनान्वयोद्भवो

हामीदअली रामपुराधिपः सुधीः ।

भूपालसन्दोहविराजितान्तरा-

मारुह्य नागं प्रययाविमां पुरीम् ॥ २८ ॥

टी०—वंहिष्ठेति । सुधीर्बुद्धिमान् वंहिष्ठा बहुतमा "प्रियस्थिरस्फिरोरुबहुलेत्यादीनां प्रस्थस्फवर्बंहीत्यादयः क्रमादादेशाः स्युः इष्ठादिषु" कीर्तिर्यस्यैवंविधो यवनान्वयोद्भवो यवनकुलोत्पन्नो हामीदअली इति नामधेयो रामपुराधिपो रामपुरभूपतिः नागं गजं समारुह्य भूपालानां सन्दोहो निवहस्तेन विराजितं अन्तरं यस्या एवंविधां इमां पूर्वोक्तां पुरीं प्रययौ उपागमत् ॥

भा०—बुद्धिमान् और बड़ी कीर्तिविशिष्ट यवनकुलोत्पन्न हामीदअलीनामक रामपुरके नव्वाब हाथीमे सवारहोकर राजाओंके समुदायमे सुशोभित इस पूर्वोक्त नगरीको चले ॥ २८ ॥

## ( कुलकम् )

रीवाधिपोऽथ निखिलागमतत्त्वदर्शी
श्रीव्यङ्कटेशरमणो हरिलग्नचित्तः ।
झिन्देश्वरः सुधिषणो रणवीरसिंहो
धाराधिपोऽतिनयशील उदाजिरावः ॥ २९ ॥

श्रीन्दौरदेशनृपतिर्हि शिवाजिरावः
श्रीछत्रपुर्नरपतिः किल विश्वनाथः ।
श्रीदातियाधिपतिरत्र तथा सहर्षं
लोकेन्द्रबाहदुर इत्यभिधानयुक्तः ॥ ३० ॥

नाभाधीशोऽनेकविद्याप्रगल्भो
हीरासिंहः कीर्तिरत्नैकपात्रम् ।
चर्खारीशो देवपूजैकचित्तः
शुद्धात्मा श्रीमालखान्सिंहनामा ॥ ३१ ॥

बृहद्दिवासभूपतिस्तुकाजिरावसंज्ञकः
फरीदकोटभूमिपो बलाढ्यवीरसिंहकः ।
महाभटानुजेन मुख्यमन्त्रिणा च संयुत-
स्तथैव सीरमोरपः सुरेन्द्रविक्रमाभिधः ॥ ३२ ॥

कपूरस्थलभूपतिः सुनयविच्छ्रीमाञ्जगज्जीतसि-

हाख्यः स्वां प्रकृतिं स्ववित्तनिचहैः सन्तर्पयन्नित्यशः ।
तादृक्स्वल्पदिवासदेशनृपतिर्मल्हारराव: सुधीः
सीरोईविषयाधिपो बहुयशाः श्रीकेसरीसिंहकः ॥ ३३ ॥

साहुच्छत्रपतिश्च नीतिकुशलः कोलापुराधीश्वरः
श्रीमान्कूचविहारदेशनृपतिर्भूपेन्द्रनारायणः ।
राधाकृष्णसमाख्यको ऽजनि रतो हिल्टीपराधीश्वरो
गङ्गासिंह इति स्वकार्य्यकुशलो बीकानिराधीश्वरः ॥३४॥

प्रभुनारायणसिंहः श्रीमान् वाराणसीजनाधिपतिः ।
तत्र भवानीसिंहो झालावाडाधिपो ऽतिशास्त्रपटुः ॥ ३५ ॥

भावल्पुरविषयेशो महमद्भावल्नमाख्यकः सुनयः ।
अथ कोटलानरेश ऐहमदअलीनामको मतिमान् ॥ ३६ ॥

श्रीनरसिंहगढेशः श्रीसिखिमेशस्तथा सुनीतिगुतः ।
श्रीराजगढनरेशो विष्णुपरो वंशदाधिपो मतिमान् ॥३७॥

श्रीमान् वरियाधिपतिर्जैसलमीराधिपश्च वाञ्चयवित् ।
श्रीमानल्वरभूपो विबुधजनप्रीतिकारकः कृतधीः ॥ ३८ ॥

श्रीमान् बूँदिनरेशः श्रीकच्चविषयाधिपः प्रजाहितधीः ।
श्रीमान्करौलिभूपःश्रीमानुच्छ्राधिपःशिवाङ्घ्रिमनाः॥३९॥

श्रीमान्समथरेशो रात्रकोटेशो ऽप्युमेदसिंहाख्यः ।
श्रीलिमरीविषयेशो मोर्वीशोवाग्जिरामजिःसुनयः ॥ ४० ॥

अथ खैरपुरनरेशो यवनकुलोभ्ञजिराधिपो मतिमान् ।
टोंकाधिपो वदान्यो महमदइब्राहिमाभिधो यवनः ॥४१॥

ह्यसेविपयाविपतिरथो सुजनमनोरञ्जनैककार्य्यरतः ।
भूपेश्वरानुयुक्तः स्थिरधिषणश्चेंग्लिशः सरलः ॥ ४२ ॥
श्रीनोर्थकोटनामा ह्यंग्लिशकोबम्बईपुराधिपतिः ।
श्रीयम्प्थैहिलनथैवचमदरासेशःसुनीतिमान् कुशलः ॥४३॥
श्रीमान् रिवोजनामा पञ्चनदीयाधिपो नयैकमनाः ।
वर्म्माधिपो मनस्वी लाटूसइन्द्रागराधिपः सुमतिः ॥४४॥
श्रीवोर्डिलिन्समाह्वो वङ्गालेशोऽनुरञ्जितप्रकृतिः ।
श्रीमध्यदेशभूपश्चासामेशस्तथा सुनीतिपरः ॥ ४५ ॥
एते भूपेंग्लिशका ह्यनुपमशोभाः स्वगौरवैकमतः ।
अधिरुह्य दन्तितुरगौरत्नादिन्द्रप्रस्थं समाययुर्नगरम् ॥ ४६ ॥

टी०—रत्नेति । अथानन्तरं हरौ विष्णौ लग्नं चित्तं यस्य विष्णुपरायणस्तथा निखिलागमानां समग्रशास्त्राणां तत्त्वं सारं दृश्यतीति तथाविधः श्रीप्रताप इत्यङ्कदेशश्रमण एतदाख्यो रत्नाधिपो रत्नादेशाधिपतिः, तथा सुधिषणः प्रशस्तबुद्धिः रणवीरसिंह एतन्नामधेयो श्रीन्द्रेश्वरो श्रीन्द्रदेशाधिपतिः, तथा अतिनये ऽनवनीतो शीलं यस्य तथाविध उदैसिंह राम एतदभिधानो धाराधिपो धारदेशाधिपतिः ॥ ४८ ॥

टी०—श्रीन्दौरेति । हीति निश्चयेन शिवाजिराव एतदभिधानः श्रीमान् इन्दौरदेशनृपतिः इन्दौरदेशेश्वरः, किलेति निश्चयेन विश्वनाथ एतदाख्यः श्रीमान् छत्रपुरनृपतिश्छत्रपुराधिपः, तथा अत्रोन्नते सदृशं यथा तथा लोके बहादुर इत्यभिधानयुक्त एतदाख्यः श्रीमान् दतियाधिपतिर्दतियादेशेश्वरः ॥ ५० ॥

---

1. Duke of Hesse, 2. Northcote, the Governor of Bombay, 3. Ampthill, the Governor of Madras. 4. Rivaz, Lt. Govr. of the Punjab. 5. J. LaTouche, Lt.-Govr., U. P. 6. Bourdillion, the Lt.-Govr. of Bengal.

टी०—नाभेति । तथा अनेकविद्याप्रगल्भो बहुशास्त्रज्ञः अनघत्र कीर्तिर्धवलरूपा अं यस्य एव स्वं नरेन्द्रकुलाब्धिभूतः । उद्देश्यविधेयभावे न लिङ्ग वचनभेदो दोषावहः । हीरासिंह एतदाख्याविशिष्टो नाभाधीशो नाभा-देशाधिपः, तथा दिव्यपूजायां भक्तं एकाग्रचित्तनियुक्तं चित्तं यस्य अतएव शु-द्धस्वान्तः श्रीमान् मालब्वानसिंहनामा एतदाख्यरत्नवान् शम्भुगार्यदे-शाधिपतिः, ॥ ३१ ॥

टी०—वृहदिति । तथा तुकोजिरावसंज्ञकस्तुकोजिरावनामा वृहद्वि-वासभूपतिः महादिवासदेशाधिपतिः, तथा बलाढ्यो बलेनयुक्तो वीरसिं-हक एतदाख्यः फरीदकोटभूमिपः फरीदकोटाधिपः, तथा तादृशदेव महाभटाऽनुजेन अविवीरकनिष्ठभ्राता तथा मुख्यमन्त्रिणा नारायण-सिंहाख्येन मुख्यसचिवेन संयुतः सहितः सुरेन्द्रविक्रमाभिधः सुरेन्द्रविक्र-मनामा सीरमोरपः सीरमोराधीश्वरः, ॥ ३२ ॥

टी०—कपूरेति । तथा सुनयवित्सुनीतिज्ञः अनघत्र निस्पृहः स्ववि-त्तनिवहैर्निजद्रव्यसमुदायैः स्वां स्वकीयां प्रकृतिं प्रजां सन्तर्पयन् सन्तो-षयन् श्रीमान् जगज्जीतसिंहाख्यो जगज्जीतसिंहाभिधेयः कपूरस्थला भूपतिः कपूरस्थलाधिपः, तादृक् तादृगमेव शुभबुद्धिर्विशिष्टो मल्हारराव एतदाख्यः स्वल्पादिवासदेशस्य नृपतिः, तथा बहुयशा बहुकीर्तियुक्तः श्रीमान् केसरीसिंहकः केसरीसिंहाभिधेयः "अनुकम्पायां कन्" सीरो-हीविषयाधिपः सीरोहीदेशाधिपतिः, ॥ ३३ ॥

टी०—साह्विति । तथा नीतिकुशलः सुनीतिज्ञः साहूछत्रपतिरेत-दाख्यः कोल्लापुराधीश्वरः कोल्लापुराधिपतिश्च, तथा श्रीमान् भूपेन्द्रना-रायण एतन्नामधेयः कूचविहारदेशनृपतिः कूचविहारदेशाधिपः, तथा अजे विष्णौ निरतस्तत्परः राधाकृष्णसमाख्यको राधाकृष्णाभिधेयो हिल्डीपराधीश्वरो हिल्डीपरादेशाधिपः, तथा स्वकार्ये निजराज्यकार्ये कुशलः प्रवीणो गङ्गासिंह इतिप्रसिद्धो बीकानेराधीश्वरो बीकाने-राधिपतिः, ॥ ३४ ॥

टी०—प्रभ्विति । तथा श्रीमान् प्रभुनारायणसिंह एतदभिधानो-

वाराणसीमनाधिपतिः काशीनरेशः, तथा तत्रैतस्मिन्ने अन्यथं शास्त्रेषु पटुश्चतुरो भवानीसिंह इतिप्रसिद्धो झालावाड़ाधिपो झालावाडेश्वरः, ॥ ३७ ॥

टी०—भावलिति । तथा सुनयः सुनीतिकुशलो महमन्दावन्तसमाख्यको महमन्द वन्तनामधेयो भावलपुरविषयेशो भावलपुरनृपतिः, अथानन्तरं मतिमान बुद्धिविशिष्ट ऐम्मदअलीनामक ऐम्मदलीतिप्रसिद्धः कोटलानरेशः कोटलाधीश्वरः, ॥ ३८ ॥

टी०—श्रीति । तथा श्रीमान नरसिंहगढेशो नरसिंहगढभूपः, तथा सुनीतिपुनो नयाभिज्ञः श्रीमान सिक्किमेशः सिक्किमदेशाधिपः, तथा निपुणो हरिसिंहमानसः श्रीमान राजगढनरेशो राजगढभूपतिः, तथा मतिमान बुद्धिविशिष्टो वंशदाधिपो वंगदादेशाधिपः ॥ ३९ ॥

टी०—श्रीमानिति । तथा श्रीमान चरियाधिपतिर्नरेशिय देशाधिपः, तथा वाक्रनयांविः शास्त्रवेत्ता जैशलमीराधिपो जैशलमेरदेशभूपालश्च, तथा कुलधीरचतुरः, अतएव विबुधजनानां पण्डितानां प्रीतिं करोतीति तादृशः श्रीमान अल्वरभूपो ऽल्वरदेशाधिपः, ॥ ३२ ॥

टी०—श्रीमानबूंदीति । तथा श्रीमान बूंदिनरेशो बूंदिदेशाधिपः, तथा मज्जायां आहिता नियोजिता धीर्येन तथाविधः श्रीमान कच्छविषयाधिपः कच्छदेशभूपतिः, तथा श्रीमान करौलिभूपः करौलिदेशाधिपः, तथा शिवस्यार्थ्ये नरणां मनो यस्यैतादृशः श्रीमान उच्छाधिप उच्छादेशस्याधिपतिः ॥ ३९ ॥

टी०—श्रीमानिति । तथा श्रीमान समथरेशः समथरदेशभूपः, तथा श्रीमान उमेदसिंहाख्य उमेदसिंहनामा रावकोटेशो रावकोटाधिपतिरपि, तथा श्रीमान तिमरीविषयेशो तिमरीदेशप्रभुः, तथा सुनयः सुनीतिपुनः श्रीमान वाणजेराणजेरेन्द्राख्यो मौर्वीशो मौर्वीदेशाधिपः, ॥ ४० ॥

टी०—अथेति । अथानन्तरं खैरपुरनरेशः खैरपुरदेशाधिपः, तथा यवनकुलो यवनवंशोत्पन्नो मतिमान बुद्धिविशिष्टो झंजिराधिपो झंजिरा-

अथ चलितदृशां पुराङ्गनानां
अवगमुखध्वनयः सुनूपुराणाम् ।
अहमहमिकयाऽग्रगामिनीनां
सपदि हि शुश्रुविरे जनैः समन्तात् ॥ ५० ॥

टी०—अथेति । अथानन्तरं हीति निश्चयेन जनैर्लोकैः समन्तादभितः चलितदृशां तरलदृष्टीनां तथा अहंपूर्वं अहंपूर्वं इत्यहमहमिकातया "मयूरव्यंसकादयश्च एतेनिपात्यन्ते" अग्रगामिनीनां सर्वाग्रगमनशीलानां पुराङ्गनानां नगरयुवतीनां सपदि तत्काले सुनूपुराणां तुलाकोटीनां [ पादाङ्गदं तुलाकोटिर्मञ्जीरो नूपुरोऽस्त्रियामित्यमरः ] अवगमुखाः सुखयुक्ता ध्वनयः शुश्रुविरे "कर्मणि लिट्" आत्मनेपदम् ॥

भा०——अनन्तर यह निश्चय है कि लोगोंसे चञ्चलदृष्टियुक्त तथा मैं पहिले मैं पहिले इसतरह आगेगमनकरनेवाली पुरयुवतियोंके उत्तमोत्तम नूपुरोंके कानोंको सुखदेनेवाले शब्द चारोंतरफसे सुनाईदिये ॥ ५० ॥

## ( युग्मकम् )

अवनितलगतावनन्यवेषौ
कथममराविति तौ दिदृक्षया नाः ।
किमु दिवमपहाय चारुहासाः
कमलदृशोऽप्सरसो महीं निजग्मुः ॥ ५१ ॥
सरणिगतजना हृतात्मबोधा
मृदुवचनेङ्गितचञ्चलानिमेषैः ॥
पुरयुवतिजनोऽयमन्यथाने-
त्यवदधिरे सुचिरं निधाय दृष्टिम् ॥ ५२ ॥

गुट पात्रोंमे अहणकरतेहुये हर्षयुक्त वे दोनों लार्डकर्जन, व्यूकआफ्कनाट शेष प्रेमदर्शिके प्रजाको देखतेहुये ॥ ५३ ॥

इति पुरमुपमामवेक्ष्य सद्यः
सकलमहीपजनानुगम्यमानौ ।
अनुपमविभवावुभौ क्षितीन्द्रौ
स्वभवनमाययतुः सहात्मसैन्यैः ॥ ५४ ॥

टी०—इतीति। सकला ये महीपजना राजलोकास्तैरनुगम्यमानौ सानुपमविभवौ अतुलितैश्वर्यौ उभौ क्षितीन्द्रौ लार्डकनाटभूपौ इतीत्थं सद्यः शीघ्रं पुरमुपमां नगरशोभां अवेक्ष्य दृष्ट्वा आत्मसैन्यैर्निजसेनाभिः सह स्वभवनं निजावासगृहं आययतुर्जग्मतुः ॥

भा०—सम्पूर्णराजाओंसे अनुगमन किये जाते ऐश्वर्ययुक्त दोनों लार्डकर्जन और ड्यूकआफ्कनाट जल्दीही इसतरह नगरशोभाको देखकर निजसैन्योंके साथ अपने आवासभवनको प्राप्तहुये ॥ ५४ ॥

अथ शुचिनभनन्दभूमितेऽब्दे
प्रथमदिने सनृपः स लार्डकर्जन् ।
नृपतिभरमहोत्सवं विधाय
तदनुमतं नृपतीन्ददावुपाधिम् ॥ ५५ ॥

टी०—अथेति। अथानन्तरं सनृपो नृपैः सहितः स लार्डकर्जन् शुचिनभनन्दभूमिते अधिकोनविंशतिशतमिते क्रैस्ताब्दे प्रथमदिने संवत्सरस्य प्रथमदिवसे नृपतिभरस्य सार्वभौमस्य महोत्सवं विधाय कृत्वा नृपतीन्कतिपयभूपान् तदनुमतं सार्वभौमसंमतं उपाधिं औपनामिकं पदं ददौ प्रायच्छत् । "अत्र राज्ञां दानग्रहणस्यानधिकारात् संप्रदानत्वाभावान्न चतुर्थी किन्तु कर्तुरीप्सिततमत्वात्कर्मत्वम्" ॥

1. Lord Curzon.

भा०—अनन्तर लार्डकर्जन्‌ने सब राजाओंके साथ १९०३ ई० [illegible] के प्रथमदिनमें राजेश्वरके महोत्सवको करके [illegible] राजाओंको सार्वभौमके समान पदक दिये ॥ ५५ ॥

श्रीमान् वडोदाधिपतिर्महेऽस्मिन्
सय्याजिरावो नयमार्गदक्षः ।
मानप्रदाऽनेकपदात्तशोभो
विराजते स्म क्षितिराजराजौ ॥ ५६ ॥

टी०—श्रीमानिति । नयमार्गे नीतिवर्त्मनि दक्षः अनुभवशाली मानप्रदैर्गौरवकारिभिरनेकपदैर्बहुपदकैरात्तशोभा यस्य तथाविधः श्रीमान् सय्याजिराव एतदाख्यो वडोदाधिपतिर्वडोदानृपतिः अस्मिन्महे उत्सवे क्षितिराजानां "राजाहः सखिभ्यष्टच्" इति समासान्तष्टच् प्रत्ययः महीपतीनां राजिः पङ्क्तिस्तस्यां विराजतेस्म ॥

भा०—नीतिमार्गप्रवीण तथा गौरवप्रद बहुतपदकोंसे [illegible] श्रीमान् सय्याजिरावनामक बडोदानरेश इस उत्सवमें राजसभामें सुशोभित थे ॥ ५६ ॥

श्रीमान् जी सी अस् ऐ सरोपनामा प्रतापसिंहाख्यः ।
भारतवर्षैकभटश्चेडरभूपो रराज तत्रैव ॥ ५७ ॥

टी०—भारतवर्षस्य एकभटः एकवीरः "जी.सी.अस.ऐ.सर" इत्येवं उपनाम यस्य तथाविधः श्रीमान् प्रतापसिंहाख्यः प्रतापसिंहाभिधः । ईडरभूप ईडरदेशाधिपतिश्च तत्रैव सभायां रराज शुशुभे ॥

भा०—भारतवर्षके मुख्य वीर "जी.सी.अस् ऐ.सर" उपनामधारी श्रीमान् प्रतापसिंहनामक ईडरदेशाधिपति भी वहां सभामें विराजमान थे ॥ ५७ ॥

अथ तत्र ल्हार्डकर्जन् सर्वेषां गौरवार्हमभिनन्द्यम् ।
हैदरबादमहीपं जी सी बी पदकमादरात्प्रददौ ॥ ५८ ॥

1. G. C. S. I. 2. G. C. B.

टी०—लार्डो यान्महीपतीन् पदकं प्रायच्छन् तान् क्रमशः परिगणयति कविः—अथेति । अथानन्तरं तत्र महोत्सवे लार्डोपाधिविशिष्टः कर्जन सर्वेषां गौरवार्हं मानयोग्यं अभिनन्द्यं स्तुत्यं हैदराबादस्य महीपं भूपालं आदरात् "जी.सी.बी" इत्येतत्पदकं उपाधिविशेषं प्रदत्तो समर्पितवान् ।

भा०—अनन्तर उस महोत्सवमें लार्डकर्जनने सबप्रकारसे गौरवके योग्य तथा प्रशंसनीय निजामहैदराबादको आदरके साथ "जी.सी.बी" पदक दिया ॥ ५८ ॥

कोचीनभूपतिवरं नीतिविदं धर्म्ममार्गविनिविष्टम् ।
जी सी अस् ऐ पदकं स लार्डकर्जन् प्रयच्छति स्माशु ॥ ५९ ॥

टी०—कोचीनेति । स लार्डकर्जन् आशु शीघ्रं नीतिविदं नयाभिज्ञं तथा धर्ममार्गे राजधर्मवर्त्मनि विनिविष्टं स्थितं कोचीनस्य देशविशेषस्य भूपतिवरं महीपतिश्रेष्ठं "जी.सी.अस्.ऐ" इत्येतत्पदकं प्रयच्छति स्मादात् ॥

भा०—लार्डकर्जनने शीघ्र नीतिज्ञ तथा धर्ममार्गमें स्थित कोचीनके राजाको "जी. सी. अस. ऐ" का पदक दिया ॥ ५९ ॥

ट्रैविन्कोरमहीपं निखिलजनानन्ददायकं स मुदा ।
जी सी ऐ ई पदकं प्रायच्छद्राजसंसदि क्रमतः ॥ ६० ॥

टी०—ट्रैविन्केति । स लार्डो राजसंसदि राजसभायां मुदा हर्षेण क्रमतो यथाक्रमेण निखिलजनानन्ददायकं समग्रलोकसुखप्रदं ट्रैविन्कोरस्य महीपं भूपं "जी.सी.ऐ.ई" इत्येतत्पदकं प्रायच्छत् दत्तवान् ॥

भा०—लार्डकर्जनने राजसभामें हर्षसे क्रमपूर्वक समग्रलोगोंके प्रसन्नकरनेवाले ट्रैविन्कोरनरेशको "जी. सी. ऐ. ई" का पदक दिया ॥ ६० ॥

सीरोहीविषयेशं सत्कार्य्यपरं तथैव नाभेशम् ।
जी सी ऐ ई पदकं प्रतिपादयति स्म सैव तत्र महे ॥ ६१ ॥

1. G. C. S. I. 2-3. G. C. I. E.

टी०—सीरोहीति । स एव लार्डः "सोऽपि लोपे चेत्पादपूरणार्थानि सोल्लोपः" तत्र महे उत्सवे सत्कार्यपरं शुभकर्मविधायकं सीरोहीविषयैतद्देशस्य ईशं अधिपतिं तथा एव नाभादेशस्य ईशं स्वामिनं "जी. सी. ऐ. ई" इत्येतत्पदकं सन्मानचिह्नं प्रतिपादयतिस्म व्यतरत् ॥

भा०—इसी लार्डकर्जनने इस उत्सवमें शुभकर्मविधायक सीरोहीनरेशको तथा नाभानरेशको "जी. सी. ऐ. ई" का पदक दिया ॥ ६१ ॥

**श्रीटिहरीमनुजेशं शास्त्रविदां मानदं स्वधर्मरतम् ।**
**के सी अस् ऐ पदकं प्रतिपादयतिस्म सत्क्रियार्हमसौ ॥ ६२ ॥**

टी०—श्रीति । असौ लार्डः स्वधर्मरतं राजनीतिपरायणं अत एव शास्त्रविदां अधीतागमानां पुरुषाणां मानदं सत्कारविधायकं श्रीमन्तं टिहरीमनुजेशं टिहरीनगराधिपं सत्क्रियार्हं मानयोग्यं "के. सी. अस्. ऐ" इत्येतत्पदकं सन्मानोपाधिं प्रतिपादयतिस्म समर्पयाञ्चकार ॥

भा०—लार्डकर्जनने स्वराजनीतिमें तत्पर अतएव विद्वानोंको सन्मानप्रद श्रीमान् टिहरीनरेशको माननीय "के. सी. अस्. ऐ" का पदक दिया ॥ ६२ ॥

**कैमोराधिपतिमसौ पटियालेशानुजं च नीतिपरम् ।**
**श्रीमद्रणवीराख्यं के सी अस् ऐ पदं तथैव ददौ ॥ ६३ ॥**

टी०—कैमोरेति । असौ लार्डः कैमोरस्य देशविशेषस्य अधिपतिं स्वामिनं तथा नीतिपरं सुनयज्ञं श्रीमन्तं रणवीरसिंहं एतन्नामकं पटियालेशानुजं पटियालानरेशस्य कनिष्ठभ्रातरं च "के. सी. अस्. ऐ" इत्येतत्पदकं तथैव ददौ प्रायच्छत् ॥

भा०—लार्डने श्रीमान् कैमोरनरेशको तथा नीतिज्ञ पटियालानरेशके कनिष्ठभ्राता श्रीमान् रणवीरसिंहको भी उसीतरह "के. सी. अस्. ऐ" का पदक दिया ॥ ६३ ॥

1.–2. K. C. S. I.

वक्कीशं यवनकुलं शाहजिहाख्यं सुनीतिवेत्तारम् ।
चर्खारीशं च तथा के[1] सी ऐ ई पदं लार्डः स ददौ ॥ ६४ ॥

टी॰—वक्कीति । तदा तस्मिन्समये स लार्डो यवनकुलं यवनवंश समुद्भवं सुनीतिवेत्तारं ज्ञातारं शाहजिहाख्यं शाहजिहनामानं वक्कीशं वक्किदेशाधिपं तथा चर्खारीशं चर्खारीविषयाधिपं च " के. सी. ए. ई " इत्येतत्पदकं ददौ प्रयच्छतिस्म ॥

भा॰—उससमय लार्ड ने यवनकुलोत्पन्न सुनीतिज्ञ शाहजिहानामक वक्कि देशाधिपतिको तथा चर्खारीनरेशको भी " के. सी. ए. ई " का पदक दिया ॥ ६४ ॥

दर्भङ्गाविषयेशं तथा स कृष्णप्रसादकं सचिवम् ।
हैदरबादाधिपतेः के[2] सी ऐ ई पदं मुदा व्यतरत् ॥ ६५ ॥

टी॰—दर्भङ्गेति । स लार्डो मुदा हर्षेण दर्भङ्गाविषयेशं दर्भङ्गानरेशं तथा राजोपाधिविशिष्टं कृष्णप्रसादकं कृष्णप्रसादनामानं, हैदरबादाधिपतेः सचिवं मन्त्रिणं च " के. सी. ए. ई " इत्येतत्पदं उपाधिं व्यतरत् प्रददात् ॥

भा॰—लार्डकर्जनने हर्षसे श्रीमान् दर्भङ्गानरेशको तथा निजाम हैदराबादके मन्त्री राजाकृष्णप्रसादको भी " के. सी. ए. ई " का पदक दिया ॥ ६५ ॥

श्रीसोन्वर्षाधिपतिं कृष्णपदाम्भोजमानसं सुनयम् ।
श्रीमच्छाहपुरेशं के[3] सी ऐ ई पदं स तत्राऽदात् ॥ ६६ ॥

टी॰—श्रीति । स लार्डस्तत्रोत्सवे सुनयं सुनीतिज्ञं तथा कृष्णपदाम्भोजे विष्णुचरणसरोरुहे मानसं यस्यैवंविधं श्रीमन्तं सोन्वर्षाधिपतिं सोन्वर्षदेशनरेशं तथा श्रीमन्तं शाहपुरेशं शाहपुरनरेशं " के. सी. ए. ई " इत्येतत्पदं अदात् वितताार ॥

भा॰—लार्डकर्जनने इस उत्सवमें कृष्णभक्त श्रीमान् सोन्वर्षानरेशको तथा सुनीतिज्ञ श्रीमान् शाहपुराधिपतिको " के. सी. ए. ई " का पदक दिया ॥ ६६ ॥

---

1, 2 & 3. K. C. I. E.

दृष्ट्वा ह्यनेकानि कुतूहलानि ते
स्वं स्वं गृहं जग्मुरथो यथायथम् ॥ ६९ ॥

टी०—श्रीति । हीति निश्चयेन श्रीभूतनाथस्य श्रीमतः सार्वभौमस्योत्सवं 'लार्डकर्नाटभूपाभ्यां सहैकमत्येति भावः' निधाय कृत्वा अतएव प्रीतिभरेण आर्द्रमानसं येषां तथाविधास्ते पूर्वोक्ताः क्षोणीभृतो महीपतयः अनेकानि कुतूहलानि कौतुकानि दृष्ट्वा विलोक्य अथो अनन्तरं यथायथं यथाक्रमं स्वं स्वं गृहं आत्मीयमात्मीयं भवनं जग्मुः ॥

भा०—यह बात प्रसिद्ध है कि राजेश्वरके उत्सवको लार्डकर्नाट भूपति साथ एकमनहोकर करके अतएव प्रसन्नचित्त वे पूर्वोक्त राजालोग भी अनेककौतुकोंको देखकर अनन्तर यथाक्रमसे अपने अपने भवनको चलेगये ॥ ६९ ॥

( युग्मकम् )

श्रीसार्वभौमेन जगद्विपत्तयः
संजह्रिरे प्राप्तमहाविपत्तयः ।
विद्वेषिणो विव्यथिरे त्रिपत्तय
आजघ्निरे लोकसुखा विपत्तयः ॥ ७० ॥

सम्राट् तवैव जगतीशरणैकहेतुः
सा वाहिनी च जगतीरितदेशसंस्था ।
दत्तावधाननियमा जगतीमजस्रं
संत्रायतां हि जगतीत्यगदीन्महीन्द्रम् ॥ ७१ ॥

टी०—श्रीति । श्रीसार्वभौमेन श्रीमता राजेश्वरेण जगतो विपत्तय आपदः संजह्रिरे अपाह्रियन्त "कर्मणि लिट्" श्रीसार्वभौमेनेति सर्वत्रान्वयः । प्राप्तमहाविपत्तयो लब्धापदस्तथा त्रिगताः पत्तयः पदातयो येषां तथाविधा विद्वेषिणः शत्रवो विव्यथिरे व्यथिता बभूवुरित्यर्थः तथा

प्राप्यादित्याशीः अवन्याः पृथिव्या ये इनाः पतयो राजानस्तेषां सङ्घा निवहा यदीयान् विभवान् यत्संबन्धिनीर्विभूतीर्दृष्ट्वाऽवलोक्य अवनीनयस्थां जगन्नीतिमार्गावतीर्णां तां बुद्धिं प्रमदात् हर्षात् प्रस्तुवन्ति उपतिष्ठन्ते। अत्र पादेषु मिश्रं व्यवहितं मध्यभागगतं यमकम् ॥

भा०—हे महाराज! सारी पृथ्वीकी रक्षामें तत्पर आपकी बुद्धि निरन्तर नीतिमार्गमें बनीरहे राजालोग जिस बुद्धिसम्बन्धी ऐश्वर्य्यको देखकर जगन्नीतिमार्गावतीर्ण उसी बुद्धिकी स्तुति करते हैं ॥ ७२ ॥

धर्म्माकृते ऽर्थनिवहस्तव धर्म्मकृत्या-
मार्य्यैर्व्ययीभवतु धर्म्मरतिप्रसक्तैः।
येन त्वमात्महितकार्य्युभयत्र सौख्य-
बीजं विवर्धय सुधर्म्मफलं नितान्तम् ॥ ७३ ॥

टी०—तव धर्मार्थकामाः कीदृशा भवन्त्वित्यत आशिषमाह। धर्मेति। हे धर्म्माकृते! हे धर्मस्वरूप! "गुणैरन्तस्त इत्यस्मिन्सूत्रे प्राचामिति योगविभागेन सर्वेषां प्लुतानां विकल्पनात् सन्धिः" तव अर्थनिवहो द्रव्यसंचयः धर्मे या रतिः प्रीतिस्तस्यां प्रसक्तैर्दत्तमनस्कैरार्यैः श्रेष्ठाधिकारिभिर्धर्म्मकृत्यां सत्कर्म्मणि व्ययीभवतु उत्सर्गयुक्तं जायताम् येन हेतुना त्वं उभयत्र उभयोर्लोकयोर्विषये आत्महितकारि स्वाभिमतदायकं सौख्यबीजं आनन्दबीजयुक्तं सुधर्म्म एव फलं तत् नितान्तमत्यन्तं विवर्धय वृद्धिं प्रापय इत्याशीः॥

भा० —हे धर्म्मावतार! आपका धननिवह धर्म्ममें प्रीतिकरनेवाले श्रेष्ठ अधिकारीलोगोंसे अच्छे धर्म्मविषयक कार्य्योंमें खर्चहो जिससे कि आप दोनोंलोकोंको भलाई देनेवाले आनन्दबीजयुक्त अच्छे धर्म्मरूप फलको अतिशयकरके बढ़ावें ॥ ७३ ॥

अर्थाः सदर्थिविनिवेशितसंश्रवास्ते
दैन्यार्दिताँश्च सुखयन्तु नृपाधिनाथ!।

येन त्वदीयममलं सुयशः पृथिव्या-
मिन्दुप्रभेव नितरां हि विकाशमीयात् ॥ ७४ ॥

टी०—अर्था इति । हे नृपाधिनाथ ! सदर्थे सन्मयोजने विनिवेशितः संश्रितो नियमो येषां तथाविधास्ते अर्था द्रव्यादयो दैन्यार्दितान दारिद्र्य-पीडिताञ्जनांश्च सुखयन्तु इति निश्चयेन येन कारणेन त्वदीयं अमलं शुद्धं सुयशः कीर्तिः पृथिव्यां इन्दुप्रभा इव चन्द्रकान्तिरिव नितरामत्यर्थं विकाशं प्रकाशं इयात् प्राप्यादित्याशीः । अत्रोपमालङ्कारः ॥

भा०—हे नृपराज ! शुभकार्योंमें रक्खेहुए नियमवाले आपके द्रव्यादिक दारिद्र्यमें पीडित लोगोंको सुखीकरें जिससे कि आपका शुद्ध यश पृथ्वीपर चन्द्र-कान्तिके समान अत्यन्त प्रकाशितहो ॥ ७४ ॥

कामः सकाम ! कमनीयगुणस्तवैषो-
न्यायाभिभूतमनसां खलपीडितानाम् ।
सत्काव्यबन्धनधियां हृदयानि नीत्या
रक्षाभिरर्थनिवहैश्च सुखीकरोतु ॥ ७५ ॥

टी०—काम इति । हे सकाम ! हे साभिलाप ! कमनीयगुणः स्पृहणी-यसद्गुणस्तव एष कामोऽभिलापः अन्यायेनाभिभूतं तिरस्कृतं मनो येषां तथाविधानां जनानां हृदयानि नीत्या नयेन तथा खलैर्दुष्टैः पीडितानां जनानां हृदयानि रक्षाभिः तथा सत्काव्यस्य बन्धने निर्माणे धीर्येषां तादृशानां हृदयानि च अर्थनिवहैर्धनसमुदायैः सुखीकरोतु इत्याशीः । अत्र यथासङ्ख्यालङ्कारः, यथासंख्यं क्रमेणैव क्रमिकाणां समन्वय इति लक्षणात् ॥

भा०—हे महाराज ! अभीप्सितगुणविशिष्ट आपका काम अन्यायसे खिन्न-चित्तवाले जनोंके चित्तोंको नीतिसे, तथा दुष्टजनोंसे पीडितलोगोंके हृदयोंको रक्षा करनेसे, तथा सत्काव्य निर्म्माण करनेवाले पुरुषोंके हृदयोंको धनप्रदानसे सुखीकरे ॥ ७५ ॥

यथा महाभूतगणः क्षितीश्वर !
परार्थ एवात्मभुवोदपादि सः ।
तथैव तन्मूर्तियुतो महोदय !
जगद्धितायैव भवान् विराजते ॥ ७६ ॥

टी०—यथेति । हे क्षितीश्वर ! यथा यादृशं आत्मभुवा ब्रह्मणा स प्रसिद्धो महाभूतगणः पृथिव्यादिः परार्थ एव अन्येषां प्रयोजनसिद्ध्य एव उदपादि "कर्मणि लुङ्" निर्मितोऽस्ति, हे महोदय ! हे महानुभाव ! तथा एव तादृशमेव तन्मूर्तियुक्तस्तेषां पृथिव्यप्तेजोवाय्वाकाशानां मूर्तिमयो भवान् जगद्धिताय लोककल्याणाय एव विराजते शोभते ॥

भा०—हे महाराज ! जिसतरह ब्रह्माने पृथिव्यादिक महाभूतगण औरोंके लिये उत्पन्न कियाहै हे महानुभाव ! उसीतरह इन महाभूत पृथिव्यादिकोंकी मूर्तिमय आप जगत्की भलाईके लिये विराजमानहैं ॥ ७६ ॥

पालनेन जगतोऽनुशिक्षया
गोपनेन सकलादुपद्रवात् ।
कृत्यबोद्धृगुणभूषितो भवान्
सद्गुणाश्रय ! पितेव वर्तताम् ॥ ७७ ॥

टी०—पालनेनेति । हे सद्गुणाश्रय ! जगतः समग्रलोकस्य पालनेन पोषणेन अनुशिक्षया पाठनादिना तथा सकलादशेषादुपद्रवादानिष्टात् गोपनेन रक्षणेन तथा कृत्यस्य कार्यस्य ये बोद्धारस्तेषां ये गुणास्तैर्भूषितो विराजितो भवान् पिता इव जनक इव वर्ततां जायतामित्याशीः ॥

भा०—हे सद्गुणोंके आधार ! जगत्का पालनसे, नसीहत सब उपद्रवोंसे रक्षाकरनेसे तथा कियेहुये कार्यके जाननेवालोंके गुणोंसे शोभायमान होकर आप पिताकी तरह अनुवर्तन करें ॥ ७७ ॥

जगती जगतीश ! साधुमार्गा

सुखमास्तां तव नीतिरक्षया ऽसौ ॥ ८० ॥

टी०—सहसेति । हे जगतीश ! हे पृथ्वीपते ! सहसा शीघ्रं गत आत्मनः खेदो यस्या अतएव हसो हसनं तेन सहिता "स्वनहसोर्वा इत्यप प्रत्ययः" आनन्दोपयुक्ता इति भावः तथा परिवारस्य स्वकुटुम्बस्य स्थितिः पालनं तया स्थितया सौख्यस्य निर्विशेष आधिक्यं यस्याः एवंविधा साधुमार्गा सन्मार्गगामिनी असौ जगती । लक्षणया तत्स्था जना गृह्यन्ते । तव ते नीतिरक्षया नयपूर्वकपरित्राणेन सुखं आस्तां वर्ततां नीतिं कुर्वन् भवान् चिरं जीवतु इति भावः इत्याशीः । श्लोकार्धादौ यमितत्वात् श्लोकार्धादियमकम् ॥

भा०—हे पृथ्वीनाथ ! शीघ्रही खेदसे रहित अतएव आनन्दयुक्त तथा स्वकुटुम्बके पालनादिसे सौख्यविशेषयुक्त सन्मार्गगामिनी यह प्रजा आपकी नीतिपूर्वक रक्षासे सुखयुक्त रहे ॥ ८० ॥

प्रकृतिकलमाञ्छश्वत्काले क्षितावभिरोप्य च

सततमभितो नीत्यम्भोभिश्चिरं प्रतिपालयन् ।

शरदि च फलोपेतान्सौगन्धिकैकसुखाञ्चितान्

कृषक इव भूमीशाधीशाधितिष्ठतु तान्भवान् ॥ ८१ ॥

टी०—प्रकृतीति । हे भूमीशाधीश ! हे राजेश्वर ! शश्वन्निरन्तरं काले ग्रीष्मर्तौ वैषणकाले च क्षितौ पृथिव्यां शुभस्थाने च अभिरोप्य संस्थाप्य च सततं नित्यं नीत्यम्भोभिर्नीतिरूपजलैः अत्र रूपकसमासः नीतय इवाम्भांसि तैः अत्रोपमितसमासः चिरं बहुकालपर्यन्तं प्रतिपालयन्सन् उभयत्र तुल्योऽर्थः शरदि शरत्काले कालविशेषे च फलेन उपेतान् युक्तान् अतएव सौगन्धिकं एवैकसुखं तेनाञ्चितान् प्राप्तान् 'धान्यपक्षे सुगन्धत्वं प्रजापक्षे सत्स्वभावत्वं' एवंविधांस्तान् प्रकृतिरूपकलमान् यद्वा प्रकृतीरिव कलमान् इति रूपकोपमितसमासौ । भवान् कृषक इव अधितिष्ठतु

तत्पालनादिक्रियाफलं प्राप्नोतु इति भावः इत्याशीः अत्र धान्यहेतुनिरूपितयोरर्थयोः अभेदाध्यवसायात् श्लेषमूलातिशयोक्तिरनुप्राणितो रूपकालङ्कारः तदनुगृहीत उपमालङ्कारः । अत्र हरिणीवृत्तम् रसयुगहयैन्सौम्रौस्लौगो यदा हरिणी तदा इति लक्षणात् ॥

भा०—हे राजेश्वर ! समयमें अनेकस्थानपर स्थापितकर और सुन्दर नीतिरूपजलमें सिञ्चनकरतेहुये आप समयपर फलयुक्त तथा सुगन्धि अन्नसे सत्स्वभावयुक्त उन प्रजारूप धान्योंसे किसानकी नाईं अपने सत्कार्य्योंके फलको प्राप्त करें ॥ ८१ ॥

वेल्साधिपो ऽपि भवदीयसुतो यवीया-
नेतां धुरं स युवराजपदाभिधेयः ।
वोढुं सहायकतया नरनाथ ! भूयाद्
येनालभस्व निजमातृसमां प्रतिष्ठाम् ॥ ८२ ॥

टी० —वेल्सेति । हे नरनाथ ! युवराजपदाभिधेयो युवराजो यवीयान् अतिशयेन युवा वयस्थापन्नो भवदीयसुतो भवत्पुत्रः स वेल्साधिपो वेल्सदेशाधिपतिः एतां धुरं राज्यभारं वोढुं धारयितुं सहायकतया सहायकभावेन तव इति शेषः भूयात् येन हेतुना त्वं निजमातृसमां स्वजनन्यनुरूपां प्रतिष्ठां महत्त्वं आलभस्व प्राप्नुहि इत्याशीः ॥

भा०—हे महाराज ! युवावस्थाको प्राप्त युवराजसंज्ञक आपके पुत्र वेल्साधिपति [ प्रिन्सआफवेल्स ] इस राज्यभारके धारणकरनेमें सहायक होवें जिससे कि आप अपनी माता श्रीमती महारानीके समान प्रतिष्ठाको पावें ॥ ८२ ॥

पौत्रो ऽपि ते नरपतीन्द्र ! तथैल्बर्टः
प्रोत्तुङ्गवैरिविरसेन्धनजातवेदाः ।
तेजस्विनां बलवतां समितौ रिपूणां
क्षत्रस्य भार्गव इवाभिजयी स भूयात् ॥ ८३ ॥

1. Prince of Wales. 2. Albert.

भगवान् सब प्रजाओंके प्रार्थनापूर्वक किये गये तथा स्त्री, पुत्र और पौत्रादिकोंसे परिवृत्त आप आनन्दके साथ कल्पपर्यन्त जीवित रहें जिससे कि पृथ्वी मङ्गल युक्त रहे ॥ ८४ ॥

असौ भारद्वाजान्वयजनिरमन्दप्रभुरति-
मुदोर्वीदत्ताह्वो विबुधबदरीदत्ततनयः ।
विरच्यैतत्काव्यं नृपतिपतिवंशादिविषयं
प्रभुप्रीत्यै पुष्पस्तवकमिव तत्प्रार्पयति तम् ॥ ८५ ॥

भा०—श्रीमान् सार्वभौममें बहुत प्रेम करनेवाला भारद्वाजकुलोत्पन्न पण्डितबदरीदत्तात्मज यह उर्वीदत्तशर्मशास्त्री सार्वभौम रणमल्लवंशादिविषयक इस ( पृथ्वीवंश ) महाकाव्यको निर्माणकर सार्वभौमकी प्रसन्नताके लिये उस ( श्रीमान् ) को पुष्पाञ्जलिकी तरह इस महाकाव्यको अर्पणकरताहै ॥ ८५ ॥

इति अन्वयबोधिन्याख्यया व्याख्यया पदार्थया भाषया च समलंकृते भारद्वाजवंशोत्पन्नबदरीदत्तात्मजोर्वीदत्तकृतौ पृथ्वीवंशे महाकाव्ये राजराजेश्वरस्य सिंहासनारोहणानन्दोत्सववर्णनन्नाम पञ्चदशः सर्गः १५ ॥

समाप्तश्चायं ग्रन्थः